**एस्.जगन्नाथः। मैसूरु**
jagannathas1956@gmail.com



११
१०.११.२०२१
बुधवासरः

दशस्वपि दिक्षु कटाक्षं पातयन्ती संस्कृतपत्रिका।

### जगन्नाथीयम्

**अमृतं कदापि वदने पतति**
**प्रतिपालितेऽपि बहुधा गरले।**
**दृशि हंसतूलशयनं स्फुरति**
**द्रुमकण्टकेऽथ मनसा रचिते॥**

### गर्ज च तर्ज च।

१.न काल एष म्रदिमानमीक्षते
महादृढान् यो लगुडानपेक्षते।
अलं सुमत्वग्रहणाभिनीतिभिर्
भव प्रयत्नान्नि शितेषुरूपधृत् ॥

२.जड स्फुलिङ्ग ! त्वमपेहि मद्दृशोः
सृतेरसंप्राप्तकरालविग्रहः।
निजं वपुर्दर्शय हे ! यदा ज्वलस्य्
अवाप्तकीलाकृतिरट्टहासवान्॥

३.किमर्थमम्भोद ! पुरेषु काननेष्व्
अवर्षयस्तूलदलानि सर्वतः ?।
नरश्रुतिद्वन्द्वविभेदकं क्रुधा
विमुञ्चसि स्फूर्जथुमुद्धतं कदा ?॥

४.असाध्नुवत्या किमपि प्रयोजनं
क्षितावलं कोमलयाऽश्मलीलया।
परं कदाचित् क्षुभितो महाशिला-
प्रचण्डघातो महिमानमञ्चति॥

५.न सज्जन त्वं सुपदैः स्तुयाः खलान् ;
इयाः कदाप्यारभटीयुजा पथा।
शुनां पुरस्तान्महिषैर्वनोद्भवैः
स्वशृङ्गकोटिष्ववलम्ब्यते न किम् ?॥

### न्याय्यभाषितं युक्तिभूषितम्

**प्रकाश् राज्** स्वीयाभिः उक्तिभिः सदा कमपि विवादं जनयन् चलच्चित्रनटः। तस्य व्याहाराः किमावेश जन्या वा तर्कोद्भूता वेत्यत्र संशयदोलाधिरूढं भवति मनः। प्राप्ताधिकारस्य शासनस्य विषये स यद् वक्ति तत्प्रायो विवादपदमेव भवति। तथापि कदाचित् स युक्तियुक्तमेव भाषत इति प्रतिभाति। ''जै भीम्'' इत्यभिधं चलच्चित्रं (तेनाभिनीतं)कञ्चन विवादमसृजत्। तत्र हिन्दीभाषाबोधो नास्तीति कारणतः कोऽप्यधिकारी कस्मैचित् चपेटिकां ददातीति घटना। एतया हिन्दीभक्तास्तदभिनेत्रे प्रकाश राजाय क्रुद्धाः। अत्रैतद् वक्तव्यम्-दक्षिणभारते हिन्द्याः आक्रमणं प्रत्यक्षमस्माकम्। केभ्यश्चन वर्षेभ्यः पूर्वं मैसूरुनगरे पूर्वं पथि पथि हिन्दी न श्रूयते स्म। अमृतायमानं कन्नडमेव श्रवणपथे पतति स्म। परन्तु अद्यत्वे टी-काफी-आपणि कानां बाहुल्यात् ''ये किधर् है'' इत्यादीनि वाक्यानि आस्फालयन्त्यस्मान्। 'ब्याँङ्क्'स्थलेषु 'चलन्' 'चेक्' इत्या दिष्वपि हिन्दीसाम्राज्यम्। दूरवाण्या जङ्गमवाण्या केषाञ्चन कर्णारुन्तुदं वचनं ''क्या आप् हिन्दी जान्ते है'' श्रोत्राध्वनि अटति। अत्र केचन ब्रूयुः-''किं गान्धीजेर्मातृभाषा हिन्दी? स किं भारतस्य राष्ट्रभाषा हिन्दीति नोवाच ?'' इति। स किं-हिन्दी राष्ट्रभाषा स्यादित्युवाच, आहोस्वित् उर्दूमिश्रिता हिन्दूस्थानी राष्ट्रभाषा स्यादित्युवाचेति नाहं वेद्मि। परन्तु गुजरातीभाषाया यदि कोऽप्यपमाननां अकरिष्यत् स किं तदसहिष्यत इति मम प्रश्नः। तस्य परमप्रियं गीतं ''वैष्णवजनतो'' इत्यादिकं गुजरातीभाषायाम् अस्ति न पुनर्हिन्दीभाषायामुत उर्दूभाषायाम्। बेङ्गलूरुनगरे केषुचन प्रदेशेषु-राजधानीयं कस्य राज्यस्य? किं कर्णाटकस्याथवा अन्यस्य?-इति भ्रान्तिर्जायते। बेङ्गलूरुनिवासिभिः हिन्दी भक्तैः कदाचित् कन्नडस्य अपमानना क्रियते। ''जै भीम्'' चलच्चित्रे सर्वमेतद् भङ्ग्यन्तरेण स्फोरितम्। एतद् विज्ञाय सर्वेऽपि शान्ता भूयासुरित्याशास्महे।

**काचित् कुङ्ग्फू-कथा**

लूषुन्, तथा, स्यान् टे- एतौ द्वौ कुङ्ग्फू-विद्या भ्यासिनौ सुहृदौ। गतेषु केषुचन वर्षेषु द्वयोरप्यभ्यासः परि समाप्तः। तयोर्गुरुः, द्वावपि तौ सम्यगेव कुङ्ग्फूविद्याम् अशिक्षताम् इति जानन्, तयोः स्वग्रामौ प्रति निवर्तितुं सूचयित्वा, ताभ्यां द्वाभ्यामपि स्वीयं गुरुकुलं स्थापनीय मित्यादिदेश।

तौ द्वावपि ''तथास्तु''. इति प्रतिज्ञाय स्वौ ग्रामौ प्रतिनिवर्त्य कुङ्ग्फूविद्याशाले समारभ्य अनेकेभ्यः शिष्येभ्यः कुङ्ग्फूकलाम् अशिक्षयताम्।.... भूयान् समयोऽतीतः।

कदाचित् लूषुन्, स्वस्य सुहृत् स्यान् टे कथं जीवनं यापयतीति ज्ञातुं कुतूहलेन तस्य ग्रामं गतः। चिरात् प्राप्तं स्वमित्रं पश्यन् स्यान् टे आनन्दतुन्दिलोऽभवत्। द्वावपि स्नेहेन वैयक्तिकान् विषयान् परस्परेण कथयन्तौ, अथ च, गुरुकुलवासकाले स्वयोः कुङ्गुफूविद्याभ्याससमये संभूताः घटनाश्च स्मरन्तौ हृष्टावभवताम्।

लूषुन् अपृच्छत्-स्यान् टे, पुत्राः कति ते ?

स्यान् टे- त्रयः।

लूषुन् -एवं वा? तान् आह्वय। ते कथं शिक्षिता स्त्वया इति ज्ञातुं परं मम कुतूहलम्।

स्यान् टे यद्यपि ''अस्तु आह्वयामि'' इत्यवदत्; परन्तु स झटिति स्वपुत्रान् नैव आह्वयत्। तेन यत् कृतं, तत्तु अन्यत्।

यस्मिन् प्रकोष्ठके तौ उपविष्टौ, तत्रत्यं द्वारमर्ध मात्रं स्यान् टे उदघाटयत्। द्वारस्योपरि निशितधारं कञ्चन खड्गं तिर्यक् अस्थापयत्।

''अधुनाऽऽह्वयामि तृतीयं पुत्रम्'' इति वदन् स्यान् टे तृतीयं पुत्रमाह्वयत्।

तृतीयः पुत्र आगतः। सः त्वरया आधावन् नाप श्यत् खड्गम्। द्वारं प्रणुदन् आगतः सः। द्वारात् खड्गो न्यपतत्। स खड्गो यावन्न पतति तावदेव स पुत्रो द्रागेव तं खड्गं स्वस्य खड्गेन द्विधा अच्छिनत्। ततः पितुरग्रे स्थित्वा सविनयम् ''आज्ञापयतु मां तातः'' इत्यवदत्।

स्यान् टे उवाच लूषुन्-कम्- ''एष मम तृतीयः पुत्रः। वारं वारमुपदिष्टोऽपि कुङ्ग्फूविद्यां सम्यक् सश्रद्धं नाभ्यस्यति। अलसश्च। अस्य विषये ममास्ति महाचिन्ता''।

लूषुन् उवाच-''वत्स, एवं न क्रियताम्। यदा गुरुकुले तव पिता तथा अहं - द्वावप्यास्व, तदा तव पिता कियत्या श्रद्धया कुङ्ग्फूविद्याम् अभ्यस्यति स्मेत्यधुना पि स्मरामि। त्वयाऽपि सम्यगभ्यसनीयेयं विद्या।''

तृतीयः पुत्रः सविनयमुवाच-''अस्तु तथैव करोमि यथा भवान् सूचयति।''

तस्य निर्गमनानन्तरं स्यान् टे ''अधुना मम द्वितीयं पुत्रम् आह्वयामि''इति वदन् द्वारस्योपरि पूर्ववदन्यं खड्गं स्थापयित्वा आह्वयद् द्वितीयं पुत्रम्। सोऽपि द्वितीयः पुत्र आगतः।

सोऽपि तृतीयः पुत्र इव खड्गं नालक्षयत्। द्वारं प्रणुदन् यावत् स आगच्छत्, तावत् स खड्गः पतितः। स तु झटिति तं खड्गं करेणागृह्णात्। सावधानं खड्गं तत्रैवा स्थापयद् यत्र स्थापित आसीत् स खड्गः पूर्वम्। ततः सवि नयं पितरमुपासर्पत्।

स्यान् टे अवदत्-''एष मम द्वितीयः पुत्रः। यद्यप्येष श्रद्धयाऽभ्यस्यति कुङ्ग्फूविद्याम्। परन्तु कदा चिदस्य अवधानं कुत्राप्यन्यत्र मित्रैः साकं व्यर्थालापेन व्ययीभवति। अभ्यस्यन्नपि कदाचित् किमर्थमेष यदा कदा अभ्यासाद् विरमति इत्येव चिन्ता मां बाधते।''

लूषुन् उवाच-''वत्स, एवं न क्रियताम्। पश्य-त्वं कुङ्ग्फूविद्याकुशलोऽसीति यत्, तन्न पर्याप्तम्। अनभ्यासे विषं विद्या इति सुभाषितं न श्रुतं किं त्वया ? अभ्यस्य सम्यक्।''

द्वितीयः पुत्रः-''ओम्। तथैव अनुतिष्ठामि यथा उपदिशति भवान्''-इत्युक्त्वा चलितः।

स्यान् टे ''अधुना आह्वयामि प्रथमं पुत्रम्'' इत्युक्त्वा प्रथमं पुत्रम् आह्वयत्।

सोऽपि प्रथमः पुत्र आगतः। परन्तु त्वरा नासीत् तस्य चलने। स सावधानं चतुर्दिशं चक्षुः प्रहिण्वन् ऊर्ध्वम प्यपश्यत्। दृष्टखड्गः सः मन्दं मन्दं द्वारं तथा स्पृशन् प्रकोष्ठकं प्रविष्टवान् यथा खड्गो नैव अपतत्। ततः स पितरं प्रा णमत्।

स्यान् टे स्वस्य पुत्रमवदत्- ''पुत्र, प्रणम मम मित्रम्-एष लूषुन्वर्यः। मया साकम् अभ्यस्त कुङ्ग्फू विद्याकः'' इति।

प्रथमे पुत्रे लूषुन्कं वन्दितवति, स्यान्टे इत्थ मवोचत-''मित्र स्यान्टे, अयं मम ज्येष्ठः पुत्रः। विवेकी, दूरदर्शी च। कदापि तितिक्षां न जहाति। सर्वत्र सर्वदा सावधानं व्यवहरति। कुङ्ग्फूविद्यां सश्रद्धमभ्यस्यति। मयाऽभ्यस्तं यत् तत् सर्वमस्मिन् संक्रामितवानस्मि। कृपया त्वम् आशिषो यच्छास्मै।

सानन्दं लूषुन् ''स्वस्ति भूयात्ते'' इति तं प्रथमं पुत्रमाशिषाऽयोजयत्।

